# ॥ सर्वसिद्धिप्रदं पुष्टिपतिस्तोत्रम् ॥

श्री गणेशायनमः ।
राधाकृष्णावूचतुः ।
पुष्टिपते नमस्तुभ्यं नमः शङ्करसूनवे ।
ब्रह्मभूताय देवाय सर्वसिद्धिप्रदाय ते ॥ १॥

स्वानन्दवासिने तुभ्यं ब्रह्मपुत्राय ते नमः ।
सिद्धिबुद्धिपते ते वै गणेशाय नमो नमः ॥ २॥

हेरम्बाय नमस्तुभ्यं नमो योगमयाय च ।
सर्वादये च सर्वेश सर्वज्ञाय नमो नमः ॥ ३॥

निर्गुणाय नमस्तुभ्यं सगुणाय नमो नमः ।
गजाननाय वै तुभ्यमभेदाय नमो नमः ॥ ४॥

शान्तिरूपाय शान्ताय शान्तिदाय महोदर ।
मूषकवाहनायैव गाणपत्यप्रियाय ते ॥ ५॥

अनन्तानन्तरूपाय भक्तसंरक्षणाय च ।
भक्तिप्रियाय देवाय भक्त्यधीनाय ते नमः ॥ ६॥

चतुर्बाहुधरायैव नागयज्ञोपवीतिने ।
शूर्पकर्णाय शूराय परशुधर ते नमः ॥ ७॥

विष्णुपुत्राय सर्वेषां पित्रे मात्रे नमो नमः ।
विनायकाय विप्राणां पुत्राय ते नमो नमः ॥ ८॥

सर्वेषां गर्वहन्त्रे च सर्वेभ्यः सुखदाय ते ।
लम्बोदराय विघ्नेश ब्रह्मनायक ते नमः ॥ ९॥

किम् स्तुवस्त्वां गणाधीश यत्र वेदादयः प्रभो ।
शुकशम्भ्वादयश्चैव बभूवुः कुण्ठिताः परम् ॥ १०॥

आवां गर्वयुतौ जातौ ब्रह्माकारौ वृथा प्रभो ।
तत्र त्वया च विघ्नेन कृतं गर्वस्य खण्डनम् ॥ ११॥

साधूनां विघ्नहर्ता त्वं शान्तियोगार्थमञ्जसा ।

असाधूनां विनाशाय ह्यतस्त्वां प्रणमामहे ॥ १२॥

विघ्नयुक्ततया ढुण्ढे आवाभ्यां योगसेवया ।
साक्षात्कारः कृतस्त्वं वै समीचीनमिदं कृतम् ॥ १३॥

हृदि चिन्तामणिं त्वां च पश्यावः सततं प्रभो ।
अतः सुशुभदो विघ्नः सञ्जातो नो गजानन ॥ १४॥

अधुना देहि विघ्नेश भक्तिं ते चरणाम्बुजे ।
दृढां यया च गर्वेण न भवावः समायुतौ ॥ १५॥

इत्युक्त्वा तं प्रणम्यैव ननृततुर्मुदान्वितौ ।
धन्यौ प्रब्रुवतौ धन्यौ दर्शनाद्गणपस्य तौ ॥ १६॥

ब्रह्मोवाच ।
ततस्तौ गणनाथो वै जगाद भक्तिभावतः ।
दृष्ट्वा प्रेमरसाह्लादयुक्तौ राधाजनार्दनौ ॥ १७॥

श्रीपुष्टिपतिरुवाच ।
भो राधे कृष्ण मे वाक्यं शृणुतं जगदीश्वरौ ।
मदीयां भक्तिमत्यन्तं करिष्येथे न संशयः ॥ १८॥

सङ्कटे स्मरणेनैव प्रकटः सम्भवाम्यहम् ।
यं यमिच्छथ आनन्दं सफलं तं भविष्यति ॥ १९॥

भवत्कृतमिदं स्तोत्रं पठनाच्छ्रवणान्नृणाम् ।
सर्वसिद्धिप्रदं पूर्णं भविष्यति सुरैश्वरौ ॥ २०॥

मत्प्रीतिवर्धनं नित्यं वाञ्छितार्थकरं भवेत् ।
अन्ते स्वानन्ददं कृष्ण भविष्यति न संशयः ॥ २१॥

इति मौद्गले पुष्टिपतिस्तोत्रं सम्पूर्णम् ।